ॐ

यस्य प्रसादः शिवतृप्तिहेतुः,
यस्य प्रसादो भवदोष-नाशः।
यस्य प्रसादः सुखमुक्ति-हेतुः,
भक्त्या गुरुं तं शिवदं प्रपद्ये॥

# परिचय

यह छोटी-सी पुस्तक "ॐ नमः शिवायः" परम आराध्य श्री गुरुदेव श्री १०८ श्रीमत् स्वामी पूर्णानन्द गिरि महाराज (शिवालय हृषीकेश वालों की) लिखित "देवार्चना"-नाम की अति उपादेय पुस्तक का सामान्य अंश मात्र है। यह श्री गुरुदेव की रचना का—श्री भगवान् के ध्यान, प्रणाम, स्तुति, वन्दना, प्रार्थना, प्रभृति—का संग्रह-रूप है।

"ॐ नमः कृष्णाय" भी ऐसी-और-एक-पुस्तिका के आकार में प्रकाशित हो रहा है। भावुक भक्त-जनों की भावना-पुष्टि होगी—यही आशय है इनके प्रचार का। श्रीगुरुदेव की लिखी कितनी एक पुस्तकें हैं जिनका प्रकाशन अर्थाभाव तथा अन्य प्रकार की भी सहायता न मिलने से अब तक संभव न हो सका। इस आश्रम की ऐसी सामर्थ्य नहीं है कि आग्रहशील भावुक व्यक्तियों के साहाय्य विना ही उन पुस्तकों का प्रचार किया जा सके।

प्रस्तुत पुस्तिका—"ॐ नमः शिवाय" का प्रकाशन दिल्ली वाले श्रीकेदारनाथ जी भटनागर की स्वर्गीया धर्म-पत्नी तथा श्रीमान् कमलकुमार (प्रेस फोटोग्राफर, दिल्ली) आदि भाई-बहनों की माता भगवद्भक्त श्रीमती श्यामादेवी जी की पुण्य-स्मृति में किया जाता है। उस धर्मप्राण देवी की आत्मा को नित्य-शान्ति मिले!—प्रार्थना है।

ओ३म्।

दिनाङ्क—
गंगा दशहरा
शकाब्द १८८२

स्वामी अच्युतानन्द
मन्त्री—
श्री स्वामी पूर्णानन्द मेमोरियल ट्रस्ट।
श्री पूर्णानन्द आश्रम,
शिवालय, ऋषिकेश।
(उत्तर प्रदेश)

ॐ

"यत् कीर्तनं यत् स्मरणं यदीक्षणं
यद् वन्दनं यच्छ्रवणं यदर्हणम् ।
लोकस्य सद्यो विधुनोति कल्मषं,
तस्मै सुभद्र-श्रवसे नमोनमः ॥"

[ श्रीमद्भागवते–२ । ४ । १५, शुकदेवः । ]



# ॐकारः

ॐ हृत्-पद्ममध्ये पुरुषं पुराणं सर्वात्मकं सर्व-निवास-भूतम् ।
ध्यायामि नित्यं परमात्म-संज्ञं चिन्मात्रमेकं प्रणवार्थ-तत्त्वम् ॥

ॐ देहेन्द्रिय-मनो-बुद्धि-प्राणादिभ्यो विलक्षणः ।
सच्चिदानन्द-सत्यात्मा य ॐकारो,—भजामि तम् ॥

ॐ यत्सत्तातो जगत्-सत्ता, यच्चित्तातो जगच्चितिः ।
यत् सुखात् जगतः सौख्यं,—तम् ॐकारं भजाम्यहम् ॥

ॐ ब्रह्म-विष्णवीश-देवेन्द्र-सूर्य-चन्द्र-ग्रहादयः ।
यदधीन प्रकाशाः स्युः,—तम् ॐकारं भजाम्यहम् ॥

# ॐकार-प्रणतिः

ॐ प्रणवाय प्रशान्ताय निर्गुणाय गुणात्मने ।
ब्रह्मणे ब्रह्म-रूपाय ॐकाराय नमोनमः ॥१॥
नमो देवादि-देवाय सर्वकारण-हेतवे ।
नित्याय निरवद्याय ॐकाराय नमोनमः ॥२॥
वेदाय वेद-रूपाय वेदान्तार्थ-प्रकाशिने ।
नमो वेदान्त-वेद्याय ॐकाराय नमोनमः ॥३॥
विश्वाय विश्व-सूत्राय विश्वाधार सदात्मने ।
नमस्ते विश्व-वन्द्याय ॐकाराय नमोनमः ॥४॥
शिवाय शान्ति-नाथाय ज्ञान-विज्ञान-रूपिणे ।
शुद्धाय मुक्ति-रूपाय ॐकाराय नमोनमः ॥५॥
मोक्ष-मार्ग-प्रकाशाय ज्ञान-दृष्टि-प्रसारिणे ।
जगद्धिताय कृष्णाय ॐकाराय नमोनमः ॥६॥
योगाय योगनाथाय योगानन्द-प्रदायिने ।
योगि-श्रेष्ठावलम्बाय ॐकाराय नमोनमः ॥७॥
स्व-प्रकाश-स्वरूपाय सर्वलोक-प्रकाशिने ।
सच्चिदानन्द-रूपाय ॐकाराय नमोनमः ॥८॥
हेयोपादेय-हीनाय पूर्णाय परमात्मने ।
द्वैताद्वैत-विहीनाय ॐकाराय नमोनमः ॥९॥
ॐकाराय नमो नित्यं प्रणवाय नमोनमः ।
प्रणवाय नमो नित्यं ॐकाराय नमोनमः ॥१०॥

# ॐकार-वन्दना

## अथवा

# प्रणवांजलिः

[ॐ] अखण्ड-मण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं राति चित्तस्थः तमोङ्कारं भजाम्यहम् ॥१॥
अजं परात्परं ब्रह्म यद्रूपेण प्रकाशितम् ।
लोकानामुपकाराय तमोङ्कारं भजाम्यहम् ॥२॥
वाच्य-वाचक-रूपाभ्याम् अखिलार्ति-विनाशकम् ।
परमानन्द-सान्द्रांगं तमोङ्कारं भजाम्यहम् ॥३॥
ब्रह्मा विष्णुर्महादेवो यस्मिन्नेव प्रतिष्ठितः ।
गुणत्रय-समायुक्तं तमोङ्कारं भजाम्यहम् ॥४॥
त्रिमूर्तिं त्रिगुणाधारं त्रिदेह-पाप-नाशनम् ।
त्रयी-गर्भं त्रितापघ्नं तमोङ्कारं भजाम्यहम् ॥५॥
अष्टांगं च चतुष्पादं त्रिस्थानं पंचदैवतम् ।
त्रयी-गीतं त्रयी-सारं तमोङ्कारं भजाम्यहम् ॥६॥
त्रयी-मूलं जगन्मूलं वर्ण-मूलं सनातनम् ।
मंत्र-मूलं चमत्कारं तमोङ्कारं भजाम्यहम् ॥७॥
नित्यरूपं महारूपं शरण्यं नित्य-सुन्दरम् ।
ज्योतिर्मयं रसाधारं तमोङ्कारं भजाम्यहम् ॥८॥
गुणातीतं महाशून्यं नित्यानन्द-निरन्तरम् ।
तमोहरं तमःपारं तमोङ्कारं भजाम्यहम् ॥९॥
अपरं च परं ब्रह्म य एवात्मा चराचरम् ।
य एव साधनं साध्यः तमोङ्कारं भजाम्यहम् ॥१०॥

ब्रह्मचर्यं यमिच्छन्तः चरन्ति ब्रह्मचारिणः ।
यं वदन्ति तपोयोगाः तमोङ्कारं भजाम्यहम् ॥ ११ ॥
ध्यान-धारण-योगादि – तृण-गुल्म-लतावृतम् ।
वेदोपनिषदर्थाख्यं तमोङ्कारं भजाम्यहम् ॥ १२ ॥
श्रुति-स्मृति-शिरोरत्न – चुम्बित-श्रीपदप्रभम् ।
मुक्त-मोहन-सौन्दर्यं तमोङ्कारं भजाम्यहम् ॥ १३ ॥
मधुरान्मधुरं हृद्यं मङ्गलानां च मङ्गलम् ।
षट्चक्र-निलयं रम्यं तमोङ्कारं भजाम्यहम् ॥ १४ ॥
सहस्रदल-पद्मस्थं देव-मानव-वन्दितम् ।
अद्भुतं यस्य माहात्म्यं तमोङ्कारं भजाम्यहम् ॥ १५ ॥
सर्वगं योग-सिद्धानां हृदिस्थं सुतपस्विनाम् ।
जीवनं सर्व-भक्तानां तमोङ्कारं भजाम्यहम् ॥ १६ ॥
मोचनं सर्व-पापानां सम्बलं पारिकांक्षिणाम् ।
उपादेयं विरक्तानां तमोङ्कारं भजाम्यहम् ॥ १७ ॥
कारणं सर्व-मन्त्राणाम् आलयं सर्व-धर्मणाम् ।
निधानं सर्व-सौख्यानां तमोङ्कारं भजाम्यहम् ॥ १८ ॥
मोक्षाय यो मुमुक्षूणां भीतानामभयाय यः ।
विजयाय युयुत्सूनां तमोङ्कारं भजाम्यहम् ॥ १९ ॥
धनाय यो दरिद्राणां क्लेशिनां क्लेश-शान्तये ।
श्रीकामानां श्रियै यो हि तमोङ्कारं भजाम्यहम् ॥ २० ॥
क्षालनं चित्त-दोषाणां शोधनं सर्व-कर्मणाम् ।
सत्फलं सर्व-शास्त्राणां तमोङ्कारं भजाम्यहम् ॥ २१ ॥
कल्याणानां महामूलं पावनानां सुपावनम् ।
वचसामेक-विश्रान्तिं तमोङ्कारं भजाम्यहम् ॥ २२ ॥
योगि-चित्तैक-विश्रान्तिं मुक्त-चित्त-विनोदनम् ।
भक्त-चातक-मेघाम्बुं तमोङ्कारं भजाम्यहम् ॥ २३ ॥

नारदादि-सुभक्तानां वीणोज्जीवनमद्भुतम् ।
सुधाब्धिमय-माधुर्यं तमोङ्कारं भजाम्यहम् ॥ २४ ॥
धर्मद्रुम-महाबीजं प्रेमानन्द-प्रदायकम् ।
महाशक्ति-प्रदातारं तमोङ्कारं भजाम्यहम् ॥ २५ ॥
ऋद्धि-सिद्धि-तपो-मूलम् ऐश्वर्य-कल्पपादपम् ।
आपामर-सुखाराध्यं तमोङ्कारं भजाम्यहम् ॥ २६ ॥
सर्वविश्व-सदाराध्यं धर्म-कामार्थ-मोक्षदम् ।
वांछा-कल्पतरुं शुद्धं तमोङ्कारं भजाम्यहम् ॥ २७ ॥
ज्ञान-वैराग्य-वीर्याणां भक्तानां परमाश्रयम् ।
महामोक्ष-प्रदातारं तमोङ्कारं भजाम्यहम् ॥ २८ ॥
समुपेत-महामृत्युं मोचयेत् परमः सुहृत् ।
पंचक्लेशापहर्तारं तमोङ्कारं भजाम्यहम् ॥ २९ ॥
भवाम्भोधि-महापोतं महामाया-निवर्तकम् ।
ऋषि-गीतं गतिं गम्यं तमोङ्कारं भजाम्यहम् ॥ ३० ॥
संसार-घोर दावाग्नि – निर्वापन-सुधानदम् ।
गर्भवास-निहन्तारं तमोङ्कारं भजाम्यहम् ॥ ३१ ॥
हंस-सोऽहं-महाज्ञानं योगिनामपि दुर्लभम् ।
यस्मात् प्रजायते चित्ते तमोङ्कारं भजाम्यहम् ॥ ३२ ॥
अज्ञान-ध्वान्त-मार्तण्डं विज्ञानपद्म-भास्करम् ।
परमालोक-दातारं तमोङ्कारं भजाम्यहम् ॥ ३३ ॥
दिव्यनेत्र-प्रदातारं सर्वविद्या-प्रकाशकम् ।
ब्रह्मविद्या-वधू-प्राणं तमोङ्कारं भजाम्यहम् ॥ ३४ ॥
शक्ति-संचारकं योगं कुण्डली-बोध-कारकम् ।
वराभय-प्रदातारं तमोङ्कारं भजाम्यहम् ॥ ३५ ॥
इष्ट-सद्भाव-दातारम् इष्टमंत्र-स्वरूपकम् ।
एकभक्ति-सुसं-सेव्यं तमोङ्कारं भजाम्यहम् ॥ ३६ ॥

अच्छिन्न-योग-संगम्यं वैराग्य-प्रेम-गोचरम् ।
समाधि-वेदितं सत्यं तमोङ्कारं भजाम्यहम् ॥ ३७ ॥
श्रद्धा-पुष्प-सदाराध्यं ब्रह्म-मूर्तिं शुभंकरम् ।
सर्वमंगल-मंगल्यं तमोङ्कारं भजाम्यहम् ॥ ३८ ॥
यदर्हण-प्रभावेण नरो याति परं पदम् ।
तारकं कर्म-छेत्तारं तमोङ्कारं भजाम्यहम् ॥ ३९ ॥
क्षीयते वासना नैव नियमेन व्रतादिना ।
यदुच्चारात् क्षयं याति तमोङ्कारं भजाम्यहम् ॥ ४० ॥
येन केन प्रकारेण गीतेन ज्ञान-लोचनम् ।
मोहान्धाय ददात्येव तमोङ्कारं भजाम्यहम् ॥ ४१ ॥
श्रवणं कीर्तनं यस्य शुद्धं वाऽशुद्धमेव वा ।
हरत्यघं मनुष्याणां तमोङ्कारं भजाम्यहम् ॥ ४२ ॥
'अशुभानि निराचष्टे तनोति शुभ-सन्ततिम् ।
स्मृति-मात्रेण' यः पुंसां तमोङ्कारं भजाम्यहम् ॥ ४३ ॥
यदेक-शरणान् पुंसः यस्याविश्रान्त-चिन्तनम् ।
तारयत्येव संसारात् तमोङ्कारं भजाम्यहम् ॥ ४४ ॥
जपाद् यस्य भवेत् सिद्धो मुक्तः स्यादर्थ-चिन्तनात् ।
साक्षाद्ब्रह्ममयो ध्यानात् तमोङ्कारं भजाम्यहम् ॥ ४५ ॥
साधनाद् यस्य योगीन्द्रो भवेन्मृत्युञ्जयः स्वयम् ।
महायोग-महाद्वारं तमोङ्कारं भजाम्यहम् ॥ ४६ ॥
स्यन्दनं यं समारुह्य ब्राह्मणा अकुतोभयाः ।
विशन्ते ब्रह्मणो धाम तमोङ्कारं भजाम्यहम् ॥ ४७ ॥
जन्मजं कर्मजं न्यूनं देश-कालादि-संभवम् ।
सर्वं करोति सम्पूर्णं तमोङ्कारं भजाम्यहम् ॥ ४८ ॥
इन्द्रियं विजितं येन येन चित्तं वशीकृतम् ।
आत्मा वशीकृतो येन तमोङ्कारं भजाम्यहम् ॥ ४९ ॥

सर्वशुद्धिं परां भक्तिं विज्ञानं परमं-सुखम् ।
शान्तिं मेधां धृतिं रातिं तमोङ्कारं भजाम्यहम् ॥ ५० ॥
य एवालम्बनं श्रेष्ठं यो वै ब्रह्म परावरम् ।
यं ज्ञात्वा लभ्यते सर्वं तमोङ्कारं भजाम्यहम् ॥ ५१ ॥
प्रात-र्मध्याह्न-सायाह्ने निशार्धे च निरन्तरम् ।
स्मरणीयो मनुष्याणां तमोंकारं भजाम्यहम् ॥ ५२ ॥
स्मर्तव्यः सततं यो हि विस्मर्तव्यो न जातुचित् ।
यो ददाति चतुर्वर्गं तमोंकारं भजाम्यहम् ॥ ५३ ॥
सर्वदेव-समायुक्तं सर्वयोग-विभूषितम् ।
प्रणवं परमं ब्रह्म तमोंकारं भजाम्यहम् ॥ ५४ ॥

## शिव-वन्दना

ॐ नमामि श्रीमहादेवं जगन्नाथं जगद्गुरुम् ।
ज्योतिर्मयं महालिङ्गम् उमया-संयुतं हरम् ॥ १ ॥
नमामि भैरवं देवं धूर्जटिं त्रिपुरान्तकम् ।
दक्ष-दर्प-हरं रुद्रं कामदं काम-नाशनम् ॥ २ ॥
नमामि शंकरं सत्यं शूल-पाणिं सदाशिवम् ।
अकिञ्चन-धनं देवम् आशुतोषं त्रिलोचनम् ॥ ३ ॥
नमामि प्रमथाधीशं गिरीशं रस-नायकम् ।
विश्वरूपं भवाराध्यं भवातीतं भवेश्वरम् ॥ ४ ॥
नमामि परमेशानं परात्मानं पिनाकिनम् ।
भुक्ति-मुक्ति-प्रदं नित्यं सर्व-पावन-पावनम् ॥ ५ ॥
नमामि श्रीमहाकालं कालातीतं वृषध्वजम् ।
सर्वज्ञं चिन्मयानन्दं चन्द्रखण्ड-विमण्डितम् ॥ ६ ॥
नमामि त्रिगुणातीतं सर्वातीतं दिगम्बरम् ।
कोटिसूर्यप्रभं देवं सहस्रार-निवासिनम् ॥ ७ ॥

नमामि सर्व-भूतेशं योगेशं योग-नायकम् ।
श्मशान-सेविनं सौम्यं सर्वेषामार्ति-नाशनम् ।। ८ ।।
महामायेश्वरं शान्तं मत्युञ्जयं महेश्वरम् ।
वामदेवं विरूपाक्षं गङ्गेशं नील-लोहितम् ।। ९ ।।
नमामि परमं-शम्भुं नमामि परमं-पदम् ।
नमामि परमं-ब्रह्म नमामि परमं-शिवम् ।। १० ।।

# श्री शिव-ध्यानानुस्मरणम् ।

ॐ उद्दिश्य यं कृतवती गिरिजा तपस्यां,
यत्पादपंकजरजो विबुधा लसन्ति ।
आशाम्बरं भुजगराज-विभूषिताङ्गं,
तं चन्द्रमौलिममलं मनसा स्मरामि ।।

———

ॐ आध्यात्मिकत्व-रमणीय-हिमाद्रिराजं,
सत्यादि-पाद-वरणीय-वृषासनस्थम् ।
योगीन्द्रसेव्य- कमनीय- पदारविन्दं,
वन्दे चराचर-गुरुं शिवमाशुतोषम् ।।

१

ॐ व्योमाम्बरं समरसम् अचलात्म-संस्थं,
चर्माम्बरं गुणधरं भव-रङ्ग-नाथम् ।
नृत्येश्वरं मधुर-सुन्दर-मन्द-यानं,
वन्दे चराचर-गुरुं शिवमाशुतोषम् ।।

२

ॐ भस्माङ्गराग-रुचिरं नव-कुन्द-गौरं
स्निग्धोज्ज्वलं भुवन-मोहन-सौम्यरूपम्

मायेश्वरं त्रिपुरसूदन-शूल-हस्तं,
वन्दे चराचर-गुरुं शिवमाशुतोषम् ॥
३
ॐ श्रीकम्बुकण्ठ-ललितं गरलाभिरामं,
बिम्बाधरं जन-मनोहर-मन्द-हासम् ।
वेदादि-शास्त्रमखिलं मधुरं ब्रुवन्तं,
वन्दे चराचर-गुरुं शिवमाशुतोषम् ॥
४
ॐ भालेक्षणं स्मरहरं शशिखण्ड-चूडं,
गङ्गेश्वरं भयहरं सुजटा-कलापम् ।
विश्वेश्वरं सकल-कारण-कारणेशं
वन्दे चराचर-गुरुं शिवमाशुतोषम् ॥
५

———

ॐ वेदान्त वेद्यं पुरुषं पुराणं
विश्वेश्वरं चाखिल-विश्वरूपम् ।
कर्पूर-गौरं त्रिजगद्-गुरुं तं
गङ्गाधरं नित्यमहं प्रपद्ये ॥
१
ॐ गङ्गाधरं सुचरणं हृदि देवमीडे,
गङ्गाधरं सुवदनं हृदि देवमीडे ।
गङ्गाधरं सुनयनं हृदि देवमीडे,
गङ्गाधरं सुखमयं हृदि देवमीडे ॥
२
ॐ गङ्गाधरं गुणमयं सततं भजामि,
गङ्गाधरं रसमयं सततं भजामि ।

गङ्गाधरं सुमधुरं सततं भजामि,
गङ्गाधरं प्रियतमं सततं भजामि ॥

# श्री शिव-कवचम्

(१) ॐ शिवो मे पुरतः पातु, शम्भुर्मे पातु पृष्ठतः ।
धूर्जटिः पातु मे केशान्, गङ्गेशः पातु मे शिरः ॥
पंचाननो मुखं पातु, ललाटं चन्द्रशेखरः ।
कर्णौ मे शंकरः पातु, नेत्र पातु त्रिलोचनः ॥
योगेशो नासिकां पातु, जिह्वां पातु श्मशानगः ।
दन्तान् पातु महाकालः, कण्ठं पातु सदाशिवः ॥
नीलकण्ठो मम ग्रीवां त्रिशूली कर-युग्मकम् ।
गिरीशः पातु मे वक्षो, हृदयं पातु मे हरः ॥
नाभिं मृत्युञ्जयः पातु जठरं भूतभावनः ।
इन्द्रियाणि समस्तानि पातु मे परमेश्वरः ॥
दिगम्बरः कटिं पातु, लिङ्गं च मदनान्तकः ।
जानु-द्वन्द्वं महादेवः, पादौ पातु वृषध्वजः ॥
ऊर्ध्वमधस्तथा दिक्षु पातु मां त्रिपुरान्तकः ।
'नमः शिवाय'-मंत्रं मे रक्षां कुर्याच्च सर्वतः ॥

ॐ ह्रौं शिवाय नमः ॥

(२) ॐ चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहि माम् ।
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम् ॥
भाललोचन भाललोचन भाललोचन पाहि माम् ।
कामनाशन कामनाशन कामनाशन रक्ष माम् ॥
विश्वकारण विश्वपालन विश्वनाशन पाहि माम् ।
सर्पभूषण दर्पदूषण गर्वसूदन रक्ष माम् ॥

शिष्टपालन दुष्टशासन इष्टकारण पाहि माम् ।
देव-रंजन दैत्य-गंजन भस्म-लांछन रक्ष माम् ॥

योगदायक लोक-नायक आद्यगायक पाहि माम् ।
शोक-वारक लोक-धारक लोक-तारक रक्ष माम् ॥

वेद-नादन पाप-वारण विश्व-तारण पाहि माम् ।
विश्व-पावन विश्व-भावन विश्व-जीवन रक्ष माम् ॥

दीन-तारण दीन-तारण दीन-तारण पाहि माम् ।
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम् ॥

ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्व्वारुकमिव बन्धना-
न्मृत्योर्मुक्षीय मामृतात् ॥

(३) ॐ नमः शिवाय शान्ताय कारणत्रय-हेतवे ।
निवेदयामि चात्मानं त्वं गतिः परमेश्वर ॥

(४) ॐ अजाय लोकत्रय-पावनाय
चिदात्मने विश्वजनाश्रयाय ।
हराय सर्व-प्रलयान्तकाय,
नमो महाकारुणिकोत्तमाय ॥

ॐ सुरैरनेकैः परिसेविताय,
जगत्प्रदीपाय हिरण्मयाय ।
महात्मने मोक्षपद-प्रदाय,
नमोऽस्तु देवाय नमः शिवाय ॥

# शिव पूजनम्

उपचाराः

१. आसनम्—ॐ स्वस्थाय सर्वाय भवासनाय
विश्वात्मने चर्म-कृतासनाय ।
धर्मासनायैव वृषासनाय
चित्तासनायासन मेतदस्तु ॥

२. स्वागतम्—ॐ सुरैः समन्तात् परिपूजिताय
समस्त – लोकैक-सुखाश्रयाय ।
सत्याय पद्मासन–सुस्थिताय
सुस्वागतं ते करुणाकराय ॥

३. पाद्यम्—ॐ अभीष्ट-कल्पद्रुम-युग्मकाय
मुनीन्द्र-योगीन्द्र-सुसम्बलाय ।
पादाब्ज-युग्माय सुलक्षणाय
गृहाण पाद्यं कृपयाऽऽशुतोष ॥

४. अर्घ्यम्—ॐ समस्त-कल्याण-गुणार्णवाय
समस्त-दुःखार्णव-शोषणाय ।
समस्त-वाञ्छा-परिपूरणाय
सर्वेश्वराय प्रददामि चार्घ्यम् ॥

५. आचमनीयम्—ॐ शुद्धाय बुद्धाय महेश्वराय
प्रीतात्मने विश्व–सुपावनाय ।
विकार–हीनाय सुमङ्गलाय
आचाम-वारि प्रददामि तुभ्यम् ॥

६. स्नानीयम्—ॐ आनन्द-बोधाब्धि-निमग्न-मूर्ते
निर्लेप निःसङ्ग भवाब्धिपोत !

गङ्गाधर, त्वं प्रतिगृह्ण वारि
स्नानीय मेतन्नमो नमस्ते ।।

७. गात्र मार्जनी—ॐ मोक्षात्मने चिद्घन-विग्रहाय,
एकात्मने ते भव-विग्रहाय ।
स्वच्छाय शर्वाय निरंजनाय,
ददामि वस्त्रं तनु-मार्जनाय ।।

८. परिधेय-वस्त्रम्—ॐ विश्वोदरायैव दिगम्बराय
सूक्ष्माय पूर्णाय चिदम्बराय ।
चर्माम्बरायैव मनोरमाय
वस्त्रं ददे ते परिधेयमेतत् ।।

९. यज्ञोपवीत-सूत्रम्—ॐ ब्रह्माण्ड-मालागत-सूत्ररूप,
गुणात्म-मायामय-सूत्रधारिन् ।
मायेश शम्भो धृत-कालसूत्र,
यज्ञोपवीतं प्रतिमुञ्च सूत्रम् ।।

१०. उत्तरीय-वस्त्रम—ॐ अनावृतो यो जगदावृणोति
मायाधरो यः स्वकमावृणोति ।
चर्मोत्तरीयस्तनु मावृणोति
तमुत्तरीयं शिवमावृणोतु ।।

११. पादुका—ॐ न प्राप्तं यस्य पादान्तं ब्रह्मणा विष्णुना पुरा ।
पादत्राणं ददे तस्मै विश्वत्राणैक-कर्मणे ।।

१२. दर्पणम्—ॐ समस्तैक-प्रकाशाय शिवाय चिन्मयात्मने ।
दर्पणं दीयते तुभ्यं महामङ्गल-रूपिणे ।।

१३. भूषणम्—ॐ तृप्तात्मने ते शशिभूषणाय
योगात्मने ते फणि-भूषणाय ।

ज्ञानात्मने भस्म-विभूषणाय
सौन्दर्य-रत्नाकर भूषणं ते ॥

१४. गात्रानुलेपनम्—ॐ सौन्दर्य-लावण्य-सुसेविताय
श्मशान-वासाय परामृताय ।
भस्माङ्गरागाय ददामि तुभ्यं
गात्रानुलेपं मदनान्तकाय ॥

१५. नेत्रांजनम्—ॐ मायांजनान्धाय ददाति नेत्रं
ज्ञानांजनेनैव निरञ्जनो यः ।
नेत्रांजनं ते प्रददामि तस्मै
मायेश्वराय त्रिविलोचनाय ॥

१६. छत्रम्—ॐ विश्वाश्रयो धर्म-सुरक्षको यः
प्रपन्न-भक्ते सुखदाश्रयो यः ।
विघ्नात् सुभक्तं जनमावृणोति
तस्मै चिते ते प्रददामि छत्रम् ॥

१७. चामरः—ॐ येनैव प्रेरितो वायुः व्यजत्येव चराचरम् ।
निर्विकाराय ते तस्मै व्यापिने चामरं ददे ॥

१८. चन्दनम्—ॐ यो विद्या-सौरभं राति अविद्या-कुण्ठात्मने ।
तस्मै ते चन्दनं दत्तं, गृहाण पांशु-चन्दन ॥

१९. पुष्पम्—ॐ ब्रह्मेन्द्र-विष्ण्वादि-विभाविताय
सद्-भक्ति-पुष्पेण सुतोषिताय ।
वैराग्य-गन्धेन सदार्चिताय
गन्धाढ्य-पुष्पाणि नमः शिवाय ॥

२०. धूस्तूर पुष्पम्—ॐ धूस्तूर-मालूर-सुपूजिताय
धूस्तूर-कर्णादि-विभूषणाय ।
धर्माय ते धूर्जटिने ध्रुवाय
धूस्तूर-पुष्पं प्रददे हराय ॥

२१. विल्व पत्रम्—ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माम्रृतात् ॥
त्रिदलं त्रिगुणाकारं त्रिनेत्रं च त्रिरायुधम् ।
त्रिदेह-पाप-संहारं विल्वपत्रं शिवार्पणम् ॥

२२. माला—ॐ नागेन्द्रमाला-परिवेष्टिताय
नागेन्द्र-मालाय-नटेश्वराय,
तत्वास्थि-माला-परिशोभिताय ।
विज्ञान-माला-परिवेषणाय
गन्धाढ्य-माला च नमः शिवाय ॥

२३. धूपः—ॐ नृणां महापातक-पूतिगन्धः
धूतो हि सद्यः कृपयैव यस्य ।
तस्मै प्रदत्तो महते शिवाय
आकाश-कल्पाय भवाय धूपः ॥

२४. दीपः —ॐ चन्द्रेश्वराय भ्रम-नाशनाय
चैतन्य-देहाय सदाशिवाय ।
स्वात्म-प्रकाशाय महोज्वलाय
ब्रह्माण्ड-दीपाय ददामि दीपम् ॥

२५. आमान्न-नैवेद्यम्-ॐ देहेन्द्रियाय विश्वाय अन्नाहारं ददाति यः ।
आमान्नं दीयते तस्मै अन्नपूर्णेश्वराय ते ॥

२६. श्रीफलम्—ॐ श्रीसेवित-श्रीपदपंकजाय
श्रीदेहज-श्रीफल-तोषणाय ।
श्रीकण्ठयुक्ताय पराश्रयाय
श्री श्रीफलं ते गुरवे शिवाय ॥

२७. फलम्—ॐ धर्म-फलं कृपा यस्य य एव तपसां फलम् ।
यो वै कर्म-फलं राति, तस्मै फलं ददाम्यहम् ॥

२८. मूलम्--ॐ मूलं यः सर्वलोकानां मूलं यः सर्व-कर्मणाम् ।
मूलं यः सर्व-वेदानां तस्मै मूलं ददाम्यहम् ॥

२६. फल-मूले--ॐ मूलं यः सर्वलोकानां मूलं यः सर्व-कर्मणाम् ।
फलं यो राति चेष्टानां तस्मै मूलं फलं ददे ॥

३०. पञ्चामृतम्--ॐ पंचाम्नाय-प्रवक्तारं पंचास्यं पंच-नायकम् ।
पंचबाण-निहन्तारं पंचामृतेन संभजे ॥

३१. पक्वान्नम्—ॐ आनन्द-लीलामय-विग्रहाय
पूर्णाय शून्याय भवोदराय ।
कालाय तुभ्यं प्रलयान्तकाय
तृप्ताय पक्वान्न मिदं शिवाय ॥

३२. मिष्टान्नम्—ॐ भवक्षुधा-निरासाय निर्वाणान्न-प्रदायिने ।
मिष्टान्नं दीयते तुभ्यं पूर्णतृप्ति-स्वरूपिणे ॥

३३. पायसः--ॐ गो-विप्र-धर्म-पालाय गोक्षीर-धवलाय ते ।
गोक्षीर-पायसं दत्तं कृपया प्रतिगृह्यताम् ॥

३४. पानीयम्--ॐ प्राणात्मने ते भव-जीवनाय
रसात्मने विश्व-सुतर्पणाय ।
षडोर्मि-हीनाय रसेश्वराय
पानीय मेतत् प्रददे भवाय ॥

३५. पुनराचमनीयम्—ॐ शुद्धात्मने पावन-पावनाय
तृप्तात्मने मङ्गल-मङ्गलाय ।
विज्ञान-देहाय पुनर्ददामि
आचाम-वारि प्रभवे शिवाय ॥

३६. ताम्बूलम्—ॐ सच्चिद्घनानन्दमयं मनोज्ञं
विम्बाधरं फुल्ल-मुखारविन्दम् ॥
प्रपूजयामि त्रिजगन्निवासं
ताम्बूल-पर्णेन शिवं नटेशम् ॥

३७. शय्या—ॐ कैलास-शय्यं गिरिशं महेशं
शमशान-शय्यं च विभूति-भूषम् ।
त्रैलोक्य-शय्यं भव मष्ट मूर्तिं
शय्योपचारेण तमर्चयामि ॥

---

# नमः शिवाय ।

ॐ अनावृतो यः परम-प्रकाशः
मोहान्ध-लोकात् सततं सुगुप्तः ।
प्रकाशितं येन चराचरं तं
देवादिदेवं सततं भजामि ॥ १ ॥
वरदं

ॐ सर्वेषु भूतेषु सदास्थिताय
देवाय मोक्षाय निरामयाय ।
शून्याय पूर्णाय परात्पराय
सत्याय शान्ताय नमः शिवायः ॥ २ ॥

सोमार्क-वह्नि-त्रयलोचनाय
अभ्रान्त-कालत्रय-दर्शनाय ।
चैतन्यरूपाय सदोज्वलाय
चन्द्रांशचूडाय नमः शिवाय ॥ ३ ॥

नेत्राग्निना यो मदनं ददाह
युद्धे च दैत्यान् शमयां चकार ।
चक्रं ददौ यो गरुडध्वजाय
वीराग्रगण्याय नमः शिवाय ॥ ४ ॥

सर्वत्र गत्यादि-विवर्जिताय
प्रेमार्द्र-रक्षाय सुचंचलाय ।
प्रेमार्द्र-चित्तासन-सुस्थिताय
कारुण्यरूपाय नमः शिवाय ॥ ५ ॥

कैलास-शैलासन-सुस्थिताय
मन्दाकिनी-नीर-निषेविताय ।
उमेश्वराय प्रमथेश्वराय
कर्पूरगौराय नमः शिवाय ॥ ६ ॥

पत्रेण पुष्पेण सुखार्चिताय
पंचाक्षरेणैव सुतोषिताय ।
ध्यानादिकर्म-प्रतिबोधिताय
भक्त्येक-लभ्याय नमः शिवाय ॥ ७ ॥

कृपात्मने ते विष-भक्षणाय
बाणादि-भक्त-प्रतिपालकाय ।
योगीन्द्र-सेव्याय यतीश्वराय
धर्मैक-पालाय नमः शिवाय ॥ ८ ॥

ॐ सच्चित्तसुखाद्वैत-परात्पराय
लीलामयायैव नटेश्वराय ।
संसार-दुःख-क्षय कारणाय
निर्वाणनाथाय नमः शिवाय ॥ ९ ॥

भागीरथी-गर्व-निसूदनाय
विश्वैकधात्रे गज-मर्दनाय ।
कामान्तकाय त्रिपुरान्तकाय
कालान्तकायैव नमः शिवाय ॥ १० ॥
श्री विल्वमूलासन मास्थिताय
श्मशान-चित्ते सुख-शायिताय ।
सर्वत्र-सुतृप्ति-सुखासनाय
भूताधिवासाय नमः शिवाय ॥ ११ ॥
मायाधरं शूलधरं त्रिनेत्रं
निरंकुशं भूतपतिं परेशम् ।
संसार-दुःखार्णव-नाविकं तं
शिवत्वदातार महं नमामि ॥ १२ ॥

---

# शिव-पंचाक्षर-स्तुतिः

ॐ नागेन्द्र-हाराय नटेश्वराय,
निर्वाणनाथाय निरामयाय ।
निर्दोषरूपाय निरञ्जनाय,
तस्मै न-काराय नमः शिवाय ॥ १ ॥
मालूर-धूस्तूर—सुपूजिताय,
मन्दाकिनी-नीर-मनोरमाय ।
मोक्षाय मुख्याय महेश्वराय,
तस्मै म-काराय नमः शिवाय ॥ २ ॥
शैलेन्द्रवासाय शिवेश्वराय,
शर्वाय शुद्धाय शुभङ्कराय ।
श्वेताय शान्ताय शमान्विताय,
तस्मै शि-काराय नमः शिवाय ॥ ३ ॥

ब्रह्मण्यदेवाय वृषध्वजाय,
ब्रह्माण्ड-दीपाय विनाशनाय।
विज्ञानरूपाय विमोचनाय,
तस्मै व-काराय नमः शिवाय ॥ ४ ॥

यज्ञ-स्वरूपाय यमान्तकाय,
योगीन्द्र-देवार्चित-शेखराय।
यज्याय योगाय यमेश्वराय,
तस्मै य-काराय नमः शिवाय ॥ ५ ॥

ॐ नमः शिवाय ॥

---

# श्री शिवस्तुतिः

ॐ नित्यं नमामि शिरसा मनसा च वाचा
विश्वेश्वरं भवगुरुं शिवमादिदेवम्।
संसार-मोचनकरं शिवदं वरेण्यं
योगीन्द्र-भक्त-मुनि-सेवित-पादपद्मम् ॥ १ ॥

भक्त्या भजामि भवनाथ मनन्तशक्तिं
कालान्तकं त्रिपुरसूदन मद्वितीयम्।
सृष्टि-स्थिति-प्रलय-कारण मप्रमेयं
मायाधरं कमलहस्त-धृत-त्रिशूलम् ॥ २ ॥

आराधयामि भजता मभयं-ददानं
वैराग्यमूर्ति मनघं शवभस्म-लेपम्।
व्याघ्राजिनाम्बरधरं विष-नील-कण्ठं
मृत्युंजयं भुजगभूष-जटाकलापम् ॥ ३ ॥

नित्यं स्मरामि रमणीय-मुखारविन्दं
आनन्दकन्द मतुलं शशिखण्ड-मौलिम् ।
नेत्रत्रयं विदित-विश्व मबाध-दृष्टिं
निर्वाणरूप मचलं खलु विश्ववन्द्यम् ॥ ४ ॥

आराधयामि वरदं हर माशुतोषं
भक्ति प्रियं मधुर-भाष मनाथ-नाथम् ।
विज्ञानदं स्मरहरं सुललाट-नेत्रं
शोक-प्रणाशनकरं पशुपाशनाशम् ॥ ५ ॥

पश्यामि कुन्द-धवलं गिरिशं नटेशं
मन्दस्मितं सकल-विश्व-विमोह-नृत्यम् ।
लीलामयं रसमयं धृत-विश्वयंत्रं
प्रेमार्णवं सुमधुरं तमनन्त-भावम् ॥ ६ ॥

आराधयामि सततं भव मष्ट-मूर्तिं
विश्वात्मकं गुणधरं धृत-विश्वरूपम् ।
सर्वेश्वरं पशुपतिं त्रिजगन्निवासं
सर्वत्रगं सकल-निष्कल-रूप माद्यम् ॥ ७ ॥

नित्यं स्मरामि मनसा पुरुषं पुराणं
शंभुं सदात्मक मलक्ष्य मचिन्तनीयम् ।
ज्योतिर्मयं विमल-बोधघनं महान्तम्
आकाश-केश मचलं तमनन्त मेकम् ॥ ८ ॥

नित्यं नमामि वपुषा परमं-शिवं तं
मुक्तीश्वरं समरसं परमात्म-रूपम् ।
सत्यं सनातन-पदं तमसश्च पारं
नन्दीश्वरं प्रियतमं खलु नित्यपूर्णम् ॥ ९ ॥

———–

# श्री शिव-आरात्रिक-संगीतम् ।

ॐ रतिपतिनाशं प्रमथ-गणेशं ।
भस्मविभूषित चर्म-निवासं ॥
ढुलु-ढुलु-नेत्रं फणिमय-गात्रं ।
शोभन-शोभित-पंच-सुवक्त्रं ॥
करधृत-शूलं शितिमय-कण्ठं ।
अर्ध-सुधाकर-शोभि-ललाटं ॥
मृदु-मृदु-हासं श्मशान-विराजं ।
मौलि-सुराजित-पन्नग राजं ॥
गिरिजनि-गौरी-हृदयविलासं ।
विश्वकृपामय सावद-वेशं ॥
डिमि-डिमि-वाणी-सुडमरु हस्तं ।
वम्-वम्-वाजित- वाजित-वक्त्रं ॥
पद्म-प्रकाशित - पादयुग-भासं ।
भज मम चित्तं भव-भय-नाशं ॥
ॐ त्रिनेत्रं स्मरारिं, त्रिशूलं पुरारिं,
भवेशं भवारिं, शिवं चन्द्रचूडम् ।
प्रसन्नं सुहासं, नटेशं महेशं,
भवं भस्मभूषं, गिरीशं प्रपद्ये ॥



# श्रीशिव-पुष्पांजलि-प्रदान-मन्त्राः ।

१—हे शम्भो जगतां-नाथ, भक्तानां भय-भंजन !
प्रसन्नो भव मामीश, महादेव, नमोऽस्तु ते ॥
एष सचन्दन-पुष्प-पत्रांजलिः ॐ श्री शिवाय नमः ॥

२—कृपां कुरु कृपासिन्धो, देहि मे चरणं तव ।
रक्ष मां त्राहि मां नित्यं, महादेव, नमोऽस्तु ते ॥
एष सचन्दन-पुष्प-पत्रांजलिः ॐ श्री शिवाय नमः ॥

३—न गति विंद्यते नाथ, त्वमेव शरणं मम ।
दुःखात् पापात् परित्राहि, महादेव, नमोऽस्तु ते ॥
एष सचन्दन-पुष्प-पत्रांजलिः ॐ श्री शिवाय नमः ॥

प्रार्थना—ॐ ज्ञानं देहि, मतिं देहि, भक्तिं देहि, महेश्वर !
विज्ञानं निर्मलं देहि, नमस्ते वृषवाहन ॥
ॐ गुणान् देहि, यशो देहि, भाग्यं धर्मं च देहि मे
निर्दोषत्वं सदा देहि, शुभान् कामांश्च देहि मे !!
ॐ तत्पुरुषाय विद्महे, महादेवाय धीमहि ।
तन्नो रुद्रः प्रचोदयात ॥ ओ३म् ॥

प्रणामः—ॐ पूर्णाय पूर्णरूपाय पूर्णानन्द-प्रदायिने ।
संसार-सागरोत्तार-तरये शम्भवे नमः ॥
ॐ नमः शिवायः ।

---

# स्वस्ति-प्रार्थना

ॐ अनावृतो यः परम-प्रकाशो मोहान्ध-लोकात् सततं सुगुप्तः।
प्रकाशितं येन चराचरं तं देवादिदेवं वरदं प्रपद्ये॥

ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनं।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मा मृतात॥ ओ३म्॥

ॐ यं शंकरं ब्रह्मविदो वदन्ति,
गायन्ति यं चारण-सिद्ध-संघाः।
तं देवदेवं प्रणमामि रुद्रं,
पुनातु विश्वं स शिवो महेशः॥

ॐ यं शंकरं वेदविदो स्मरन्ति,
त्रैलोक्यपूज्य स्त्रिगुणात्म-रूपः।
यस्मिन् जगत् संहरतेऽखिलं च,
पुष्णातु विश्वं स शिवो महेशः॥

ॐ यः शंकरः सर्वजनेषु पूजितः,
धर्मस्य वृद्धिं कुरुते जनानाम्।
यः सर्वपापक्षय-कारणं च,
प्रपातु विश्वं स शिवो महेश॥

ॐ तत्पुरुषाय विद्महे, महादेवाय धीमहि।
तन्नो रुद्रः प्रचोदयात॥ ओ३म्॥

ॐ सर्वेषाञ्च शिवं भूयात् पूर्णानन्दः सदाऽमलः।
शिवस्यैव प्रसादेन शक्तिपातानुभावतः॥

ॐ शान्तिः। ॐ शान्तिः। ॐ शान्तिः।

ओ३म्॥

---

# अष्ट मूर्ति (विश्वमूर्ति)-प्रणामः ।

ॐ तिष्ठत्यस्यां पृथिव्यां यः, पृथिवी वेत्ति नैव यम् ।
रूपं च पृथिवी यस्य,—तस्मै पृथ्व्यात्मने नमः ॥…प्रणामः ।

" अपसु तिष्ठति यो देवो, नैवापो वेत्ति यं प्रभुम् ।
आपो रूपं च यस्यैव,—नमस्तस्मै जलात्मने ॥ …" ।

" योऽग्नौ तिष्ठत्यमेयात्मा, न यं वेत्ति हुताशनः ।
अग्नी रूपं भवेद् यस्य,—तस्मै वह्न्यात्मने नमः ॥ …" ।

" सदा तिष्ठति यो वायौ, न वायु र्वेत्ति यं परम् ।
वायु र्यस्य भवेद् रूपं,—तस्मै वाय्वात्मने नमः ॥ …" ।

" व्योम्नि तिष्ठति यो नित्यं, व्योम वेत्ति न यं हरम् ।
व्योम यस्य भवेद् रूपं,—तस्मै व्योमात्मने नमः ॥ …" ।

" सूर्ये तिष्ठति यो देवो, न सूर्यो वेत्ति यं विभुम् ।
यस्य सूर्यो भवेद् रूपं,—तस्मै सूर्यात्मने नमः ॥ …" ।

" चन्द्रे तिष्ठति यः शम्भुः, न चन्द्रो वेत्ति यं शिवम् ।
चन्द्रो यस्य भवेद् रूपं,—तस्मै चन्द्रात्मने नमः ॥ …" ।

" तिष्ठति यजमाने यो, यजमानो न वेत्ति यम् ।
यजमानोऽपि यद् रूपं,—यजामानात्मने नमः ॥ …" ।

" यस्माद् विश्वं समुद्भूतं, यस्मिन् विश्वं प्रलीयते ।
यस्मिन् शम्भौ स्थितं विश्वं,-तस्मै विश्वात्मने नमः ॥ …" ।

ॐ नमः शिवाय विश्वात्मने । विश्वातीताय नमः शिवाय ॥ …" ।

ओ३म् ॥

---

# शिवांजलिः ।

ॐ अखिलाधार मद्वैतम् अखिलात्मानमव्ययम् ।
अनन्त-पाणि-पादाक्षम् अष्टमूर्तिमहं भजे ॥ १ ॥
अनावरण-विज्ञानम् अज्ञान-तिमिरापहम् ।
अनंग-दर्प-संहारम् अर्धेन्दु शेखरं भजे ॥ २ ॥
अनन्तानन्द-सम्पूर्णम् अलौकिक-सुखाश्रयम् ।
अखण्डयोग-सन्तृप्तम् अहीन्द्र भूषणं भजे ॥ ३ ॥
अम्बिका-फणि-माणिक्यम् अम्बिका-मीन-जीवनम् ।
अम्बिका-नित्य संयुक्तम् अर्धाम्बिकेश्वरं भजे ॥ ४ ॥
अचिन्तित-गुण ग्रामम् अशेष-मंगलास्पदम् ।
अविचिन्त्य-महाशक्तिम् अभौतिक-तनुं भजे ॥ ५ ॥
अस्थिमाला-विभूत्यंगम् अप्रपंच मनम्बरम् ।
अन्तशय्या-कृतावासम् अकिञ्चन-प्रियं भजे ॥ ६ ॥
अप्रपञ्च-सदातुष्टम् अनन्य-प्रेम गोचरम् ।
अच्छिन्नयोग-संगम्यम् अपर्णेश-शिवं भजे ॥ ७ ॥
अपार-करुणा-सिन्धुम अनाथ-दीन-वत्सलम् ।
आपामर-सुखाराध्यम् आशुतोषमहं भजे ॥ ८ ॥
आनन्दैक-रसाधारम् आत्मसायुज्य-दायकम् ।
आब्रह्म-भुवनालम्बम् आत्माराम-शिवं भजे ॥ ९ ॥
आकर्ण-लोचनद्वन्द्वम् आरक्त-गण्डमण्डलम् ।
आजानु-सुभुजद्वन्द्वम आसेचन-तनुं भजे ॥ १० ॥
इन्दुकोटि-निभासांगम् इन्दुमौलि-मनोहरम् ।
इन्दिरार्चन-सन्तुष्टम् इष्टदेवमहं भजे ॥ ११ ॥
इष्ट-सद्भाव-दातारम इष्टमन्त्र-स्वरूपकम् ।
इच्छा-ज्ञान-क्रियाधारम् ईशानमीश्वरं भजे ॥ १२ ॥

उत्तमाङ्ग-सुखासीनम् उल्लासोज्वल-लोचनम् ।
उत्कृष्ट-रूप-लावण्यम् उमानाथमहं भजे ॥ १३ ॥
उमाकान्तम् उमाराध्यम् उमा-चित्त-प्रशान्तिदम् ।
उमा-प्राणैक-विश्रान्तिम् उमानन्द-शिवं भजे ॥ १४ ॥
उत्तमोत्तम-शोभाढ्यम् उत्तमश्लोक मूर्ध्वगम् ।
ऋद्धि-सिद्धि-तपो-मूलम् ऋषि-गीतम् ऋतं भजे ॥१५॥
एकभक्ति-सुसंसेव्यम् एकप्राणैक-सम्बलम् ।
एकमेकत्वदातारम् एकदेवमहं भजे ॥ १६ ॥
ऐकाग्र्य-धारणा-लक्ष्यम् ऐश्वर्य-कल्पपादपम् ।
ओंकारवेद्यमोङ्कारम् ओङ्कारेश महं भजे ॥ १७ ॥
औपम्य-सम्भवातीतं कल्याणामृत-वर्षिणम् ।
कैलासचारिणं कान्तं कमनीय-तनुं भजे ॥ १८ ॥
कुन्द-कर्पूर-गौराङ्गं कुन्ददन्त-मनोहरम् ।
कम्बुकण्ठ-सुरम्याङ्गं कोमलाङ्गमहं भजे ॥ १९ ॥
कोमल-श्रीपदद्वन्द्वं कलि-कल्मष-नाशनम् ।
कोमलं कोमलप्राणं केदारेशमहं भजे ॥ २० ॥
केदारं केवलानन्दं कृत्तिवासं कपर्दिनम् ।
कारण-कारणं कालं कालान्तक महं भजे ॥ २१ ॥
कालाञ्जन-महारङ्गं काल-कालं कृतान्तकम् ।
कण्ठे-कालं कलानाथं कामरूपं कविं भजे ॥ २२ ॥
कामदं काम-कर्मेशं कामारिं कामनान्तकम् ।
कर्मफल-प्रदातारं कर्मबन्ध-हरं भजे ॥ २३ ॥
काशीशं कर्म-छेत्तारं काशीमृत-विमोक्षदम् ।
क्लेश पंचक-हर्तारं कृपाशक्तियुतं भजे ॥ २४ ॥
कृपावेशन-कर्तारं कुल-कुण्डलिनीश्वरम् ।
कैवल्यमुक्ति-दातारं कृतान्त-खण्डनं भजे ॥ २५ ॥

खण्डिताश्रित-पापाद्रिं खण्डितासुर-विक्रमम् ।
खण्डित-जाह्नवी गर्वं खण्डित-त्रिपुरं भजे ॥ २६ ॥
खण्डिताखण्ड-मायेशं खगराज-सुनासिकम् ।
गजदैत्य-निहन्तारं गजचर्माम्बरं भजे ॥ २७ ॥
गङ्गेशं गायकश्रेष्ठं गीत-वाद्य-प्रकाशकम् ।
गालवाद्य-प्रियं गेयं गीत-प्रिय महं भजे ॥ २८ ॥
गौरी-गीत-रसोल्लासं गौरी-चातक-वर्षणम् ।
गौरी-चित्त-समासीनं गौरी कान्त महं भजे ॥ २९ ॥
गिरिजेशं गतिं गम्यं गुरुदेवं गुणालयम् ।
गर्भवास-निहन्तारं गतिदं गुणदं भजे ॥ ३० ॥
गुणत्रयं गुणातीतं गिरीशं गिरि-शायिनम् ।
घण्टाकर्ण-प्रियाराध्यं चन्द्रनाथ महं भजे ॥ ३१ ॥
चन्द्रार्क-नखर प्रान्तं चन्द्रार्काग्नि-विलोचनम् ।
चिदम्बरं चमत्कारं चिदानन्द-तनुं भजे ॥ ३२ ॥
चित्त-चैतन्य-दातारं चराचरावभासकम् ।
चतुर्वर्ग-प्रदातारं चराचर-गुरुं भजे ॥ ३३ ॥
छिन्न-साधक-संसारं छिन्न-साधक-बन्धनम् ।
छिन्न-साधक-सन्देहं जगद्गुरु महं भजे ॥ ३४ ॥
जगदीशं जगद्बीजं जगद्रङ्ग-महानटम् ।
जगत्कालं जगत्सारं जगच्चिन्तामणिं भजे ॥ ३५ ॥
जगन्मयं जगद्रूपं जटामण्डित-मस्तकम् ।
जनार्दनं जगन्नाथं जन्म-मृत्युहरं भजे ॥ ३६ ॥
ज्योतिर्मयं जगद्दीपं जगज्जीवन-कारणम् ।
जगदार्ति-निहन्तारं जित्वरं जयदं भजे ॥ ३७ ॥
जितेन्दुकोटि-सौन्दर्यं जितेन्दु-श्रीमुखाम्बुजम् ।
जिताब्धिकोटि-गाम्भीर्यं जित-कामं जयं भजे ॥ ३८ ॥

जितान्धक-महादैत्यं जितान्तकं जितामयम् ।
जितनिद्र-मुनि-ध्येयं जगच्चित्तहरं भजे ॥ ३६ ॥
जगन्मोहन-सङ्गीतं झंकारिणी-शिरोरूहम् ।
डमरु-श्रीकराम्भोजं ढक्का-विनोदिनं भजे ॥४०॥
ताल-मान-रसाधारं त्रिमूर्तिं ताण्डव-प्रियम् ।
तमोहरं तमः-पारं तत्वमालाधरं भजे ॥ ४१ ॥
तत्वज्ञान-प्रदातारं तारकं तारकेश्वरम् ।
त्रयीमयं त्रयीरूपं त्र्यम्बकेश महं भजे ॥ ४२ ॥
त्रिपुरारिं त्रितापघ्नं त्रिशूलास्त्र-कराम्बुजम् ।
त्रिदेह-पाप-संहारं त्रिगुणाधीश्वरं भजे ॥ ४३ ॥
त्रिकालज्ञं त्रिलोकेशं तीर्थमूल-पदद्वयम् ।
तेजोरूपं तपोमूर्तिं त्रैलोक्य-बांधवं भजे ॥ ४४ ॥
दारिद्र्यासुर-संहारं दुःख-ताप-निवारणम् ।
दीननाथं दयाधारं दान-वीर महं भजे ॥ ४५ ॥
दिव्यनेत्र-प्रदातारं दिव्ययोग-प्रकाशकम् ।
दधीच-वत्सलं दिव्य दुर्गानाथ महं भजे ॥ ४६ ॥
दक्षदर्पहरं दक्षं दक्षिणं दण्डनायकम् ।
द्रोणपुष्प-सदातोषं दक्षेश्वर-शिवं भजे ॥ ४७ ॥
दीर्घाङ्गं दोष-निर्मुक्तं दिव्यलोचन-गोचरम् ।
दीप्ताङ्गं देवदेवेशं देशातीत महं भजे ॥ ४८ ॥
देश-कालादि-कर्तारं देश-काल-विलासिनम् ।
दिगन्तव्यापिनं देवं दिगम्बर महं भजे ॥ ४९ ॥
धूर्जटिं धवलं धर्मं धर्म-कामार्थ-मोक्षदम् ।
ध्यानगम्यं ध्रुवानन्दं धूस्तूर-भूषणं भजे ॥ ५० ॥
नन्दी-प्रियतमं नित्यं नटेशं नित्य-सुन्दरम् ।
नाट्यवेद-प्रवक्तारं नाद-प्रकाशकं भजे ॥ ५१ ॥

नागचूडं निरातङ्कं नीलकण्ठं निरञ्जनम् ।
नित्यपूर्णं निराधारं नित्य-रूप महं भजे ॥ ५२ ॥
निर्वाणदं निरालम्बं निःश्रेयसं निरन्तरम् ।
नित्यानन्द-प्रदातारं नित्योदार महं भजे ॥ ५३ ॥
प्रपन्न-क्लेश-हर्तारं पातकीजन-तारणम् ।
पशु-पाश-निहन्तारं प्रभुं पशुपतिं भजे ॥ ५४ ॥
पतित-पावनं पुण्यं पुण्य-श्रवण-कीर्तनम् ।
पुण्यश्लोकं प्रभाजुष्टं पावन-पावनं भजे ॥ ५५ ॥
पवित्रं परमानन्दं परमेशं परात्परम् ।
पूर्णानन्द-प्रदं पूर्णं परिपूर्णतमं भजे ॥ ५६ ॥
पूर्णप्रेम-रसाधारं परमामृत-सागरम् ।
प्रेमानन्द-प्रदातारं प्रेमवश्य महं भजे ॥ ५७ ॥
प्रेमभक्ति-समाकृष्टं पार्वती-प्राणवल्लभम् ।
प्राणेशं पुष्पदन्तेशं प्रमथेश महं भजे ॥ ५८ ॥
पत्रपुष्प-सुखाराध्यं पूर्ण-विज्ञान-विग्रहम् ।
पारहीन-चिदम्भोधिं परबिन्दु महं भजे ॥ ५९ ॥
परमालोक-दातारं परब्रह्म-कलेवरम् ।
परमाश्चर्य्य-कर्माणं पञ्चानन महं भजे ॥ ६० ॥
पञ्चाम्नाय-प्रवक्तारं प्रपंच-पंच-नायकम् ।
पञ्चबाण-निहन्तारं पंच ब्रह्मात्मकं भजे ॥ ६१ ॥
पञ्चाक्षर-महामंत्रं पंचक्रोशी-विराजितम् ।
पञ्चक्लेशापहर्तारं पंचातीत महं भजे ॥ ६२ ॥
प्रलयोर्मि-महासिंधुं प्रशांतं परमाक्षरम् ।
पांशुचन्दन-लिप्ताङ्गं पुराणं पुरुषं भजे ॥ ६३ ॥
प्रधान-पुरुषेशानं परमं पुरुषोत्तमम् ।
प्रधान-पुरुषातीतं पूज्यं पर-शिवं भजे ॥ ६४ ॥

प्रवरं परमात्मानं पुरंजयं पिनाकिनम् ।
प्रफुल्ल-वदनाम्भोज पीयूष-वचनं भजे ॥ ६५ ॥
पक्व-बिम्बाधरं श्रेष्ठं प्रसन्नं प्रिय-दर्शनम् ।
पत्रपुष्प-विचित्राङ्ग फणीन्द्र-कङ्कणं भजे ॥ ६६ ॥
विज्ञान-पद्म-मार्तण्डं ब्रह्म-विष्णु-शिवात्मकम् ।
वाराणसी-पुराधीशं विश्वनाथ महं भजे ॥ ६७ ॥
विश्वेश्वरं विधातारं व्यापिनं व्योम-कुन्तलम् ।
विश्वरूपं विरूपाक्षं विश्वोदर महं भजे ॥ ६८ ॥
विश्व-माया-विधातारं विश्वाद्यं विश्वतोमुखम् ।
विश्व-विमोहनं वन्द्यं विश्वैक-नायकं भजे ॥ ६९ ॥
विश्व-त्राणैक-कर्माणं विश्वम्भरं विषाशनम् ।
विपदापन्निहन्तारं वैद्यनाथ-शिवं भजे ॥ ७० ॥
वराभय-प्रदातारं वांछा-कल्पतरुं विभुम् ।
बाणार्चन-सुसन्तुष्टं बाणेश्वर-शिवं भजे ॥ ७१ ॥
बिल्वपत्र-सुसन्तोषं बिल्वमूल-प्रियाश्रयम् ।
व्याघ्रचर्म-परीधानं वृषेन्द्र-वाहनं भजे ॥ ७२ ॥
वृषचर्म-समारूढं ब्रह्म-विष्णु-नमस्कृतम् ।
वेद-गर्भं विशालाक्षं बिन्दु-देव महं भजे ॥ ७३ ॥
बिन्दु-नाद-कलाधारं ब्रह्मघोष स्वरूपकम् ।
वर्ण-मन्त्र-प्रवक्तारं विषाण-धारणं भजे ॥ ७४ ॥
बीज-मन्त्रेश्वरं बीजं बीजोत्थित-परावरम् ।
वरिष्ठं बुद्धिदं बुद्धं विश्वबीज महं भजे ॥ ७५ ॥
वरेण्यं विश्व-भर्तारं बंध-मोक्ष-स्वरूपकम् ।
विद्यामाल्य-प्रदातारं वैराग्य-भक्तिदं भजे ॥ ७६ ॥
भक्त-वात्सल्य-पाथोधिं भक्तेशं भक्त-रक्षकम् ।
भक्ति-प्रियं भवानीशं भृङ्गीशं भैरवं भजे ॥ ७७ ॥
भूत-भव्य भवन्नाथं भूतेशं भुवनेश्वरम् ।
भोग-मोक्षैक-कर्तारं भालनेत्र महं भजे ॥ ७८ ॥

भासक-भासकं भग भान्तं भ्रान्ति-विमोचकम् ।
भीषण-भीषणं भीमं भवभीति हरं भजे ॥ ७९ ॥
भव-भंग-करं भद्रं भव-रोगैक-भेषजम् ।
भवाम्भोधि-महापोतं भावगम्यं भवं भजे ॥ ८० ॥
भवेश्वरं भवाधारं भवात्मानं भवान्तकम् ।
भगवन्तं भवानन्दं भूमानन्द महं भजे ॥ ८१ ॥
मधुर-स्मेर-सम्भाषं मधुरं मधुराकृतिम् ।
मन्द-यानं महेशानं मंगलैकालयं भजे ॥ ८२ ॥
मंत्र-तंत्र-प्रवक्तारं मंत्र-यंत्र-प्रकाशकम् ।
मंत्रसिद्धि-प्रदातारं मोक्ष-प्रद महं भजे ॥ ८३ ॥
मोक्षरूपं महानन्दं मकरध्वज-नाशनम् ।
मृत्युञ्जयं महाकालं महाशून्य महं भजे ॥ ८४ ॥
महारुद्रं महादेवं महाप्रभुं महेश्वरम् ।
महाशिवं महारूपं महानट महं भजे ॥ ८५ ॥
महामायेश्वरं मुख्यं महामाया-निवर्तकम् ।
महामोह-निहन्तारं महायोगेश्वरं भजे ॥ ८६ ॥
योग-प्रकाशकं योगं योगीशं योग-दायकम् ।
यम-याम्य-प्रदातारं यम-भीति-हरं भजे ॥ ८७ ॥
रुद्रं रुद्राक्ष-सन्तुष्टं रामेशं रस-नायकम् ।
रस मूर्तिं रसाधारं रक्षक-रक्षकं भजे ॥ ८८ ॥
रक्त-पाणि-पद-प्रान्तं रजताचल-सन्निभम् ।
रम्य-दृक्पातनं रम्यं रम्य-रदच्छदं भजे ॥ ८९ ॥
लावण्य-लहरी-सिन्धुं लसल्ललाट-लोचनम् ।
लिङ्गार्चन-सदातोषं लीलामय महं भजे ॥ ९० ॥
लीला-कल्लोल-पाथोधिं लीला-कर्म-विनोदनम् ।
लीला-विश्व-विधातारं लोकानुग्राहकं भजे ॥ ९१ ॥
श्रीकण्ठं शंकरं शम्भुं शरभाकार-धारिणम् ।
शक्तिनाथं शिवाकान्तं शक्ति-संचारकं भजे ॥ ९२ ॥

शिवं शिवत्व-दातारं शरण्यं शूलधारिणम् ।
शिवरात्रि-व्रतामोदं श्रीफलाराधितं भजे ॥ ९३ ॥
श्रद्धा-नैवेद्य-सन्तोषं शुद्ध-वैराग्य-तोषितम् ।
श्मशानचारिणं शर्वं षट्चक्र-निलयं भजे । ९४ ॥
सर्वविश्व-महाधारं सर्वविश्व-विराजितम् ।
सर्वपदार्थ-तिष्ठन्तं सर्वत्र-गोपितं भजे ॥ ९५ ॥
सर्वरूपधरं सर्वं सर्वमयं सनातनम् ।
सर्वस्थानोपलब्धव्यं सहस्रार-प्रियं भजे ॥ ९६ ॥
सारल्य-कुसुमाराध्यं सत्यांजलि-सुतोषितम् ।
स-त्याग-प्रेम-लब्धव्यं समाधि-वेदितं भजे ॥ ९७ ॥
स्वतंत्रं सर्वगं सत्यं स्व-भुवं सर्व जीवनम् ।
स्वप्रकाशं सदानन्दं सर्वावभासकं भजे ॥ ९८ ॥
सर्वशक्ति-महाधारं सर्वपूर्णत्व-मण्डितम् ।
सारात्सारं सुखाधारं स्थिरं सदाशिवं भजे ॥ ९९ ॥
सर्वकारण-कर्तारं सर्वकर्मैक-कारणम् ।
सुख-दुःखैक-धातारं स्थाणुं सर्वेश्वरं भजे ॥१००॥
सर्वलोकैक-कर्तारं सर्वलोकैक-नायकम् ।
सर्वलोकैक-धातारं सर्वान्तर्यामिनं भजे ॥१०१॥
सर्वलोकैक-भर्तारं सर्वलोकैक-पालकम् ।
सर्वलोकैक-हर्तारं सर्वलोक-गतिं भजे ॥१०२॥
सर्वलोकैक-विश्रान्ति सर्वमोक्ष-प्रदायकम् ।
सर्वतापापहर्तारं सर्वबन्ध-हरं भजे ॥१०३॥
सर्वमङ्गल-मङ्गल्यं सर्वतीर्थैक-पावनम् ।
सर्वमङ्गल-दातारं सोम-नाथ महं भजे ॥१०४॥
सर्वज्ञान-सदा-सिद्धं सर्वशास्त्र-प्रकाशकम् ।
सर्वज्ञं सिद्धिदं सौम्यं सर्वांग-सुन्दरं भजे ॥१०५॥
सच्चिदानन्द-सान्द्राङ्गं सर्वदेवोत्तमोत्तमम् ।
सृष्टि-स्थित्यन्त-कर्तारं सतीशं सुखदं भजे ॥१०६॥

हिमाद्रि-तनया-प्राणं हृत्-पुण्डर-विराजितम् ।
हरं हंसेश्वरं हंसं हौं-कार-संभवं भजे ॥१०७॥
क्षेत्रज्ञं क्षेत्र-धातारं क्षेत्र-क्षेत्रज्ञ-नायकम् ।
क्षयहीनं क्षमाशीलं क्षेमं क्षेमंकरं भजे ॥१०८॥

ॐ नमः शिवाय ।

ओ३म् ॥

---

# नमोनमः श्री गुरवे शिवाय

ॐ विज्ञानरूपाय परात्पराय चिदात्मने विश्व-सुपावनाय ।
मायान्तकाय भ्रमनाशनाय नमोनमः श्री गुरवे शिवाय ॥
महात्मने मोक्षपद-प्रदाय नमो महाकारुणिकोत्तमाय ।
नमो नमो भक्त-सुगोचराय नमो नमः श्रीगुरवे शिवाय ॥
भक्तार्चित-श्रीपदपङ्कजाय प्रपन्न-भक्ते सुखदाश्रयाय ।
श्वेताम्बराय भ्रमनाशनाय नमो नमः श्री गुरवे शिवाय ॥
कस्तूरिका-चन्दन-लेपनाय पुष्पादि-माला-परिशोभिताय ।
त्रैलोक्य-निस्तार-शरीरकाय नमो नमः श्री गुरवे शिवाय ॥
स्मेराननाब्जाय मनोरमाय प्रफुल्ल-नीलोत्पल-लोचनाय ।
अम्भोधर-श्यामल-कुन्तलाय नमो नमः श्रीगुरवे शिवाय ॥
ब्रह्मण्यदेवाय शुभङ्कराय विज्ञान रूपाय गुणार्णवाय ।
पूज्याय लोकत्रय-पावनाय नमो नमः श्रीगुरवे शिवाय ॥
निर्वाण-नाथाय निरञ्जनाय निर्दोषरूपाय निरामयाय ।
निःषङ्ग-योगीन्द्र-सुसेविताय नमो नमः श्रीगुरवे शिवाय ॥

ॐ तत् सत् । ओ३म् ॥

—:x:—

# इस आश्रम में मिलने वाली पुस्तकें :—

## श्रीमत् स्वामी पूर्णानन्द गिरि-महाराज-लिखित--

| | | |
|---|---|---|
| १. पूर्णज्योतिः—मूल सँस्कृत तथा टीका देवनागरी लिपि में | मूल्य | ३) रुपये |
| २. पूर्णज्योतिः--मूल सँस्कृत तथा बङ्गला—अनुवाद बङ्गला लिपि में | मूल्य | ३) रुपये |
| ३. वेदवाणी—प्रथम प्रचार—बङ्गला | ,, | २) ,, |
| ४. ,, द्वितीय प्रचार—,, | ,, | ३॥) ,, |
| ५. ,, तृतीय प्रचार—,, | ,, | २) ,, |
| ६. वेदवाणी—प्रथम प्रचार—हिन्दी अनुवाद | ,, | १) ,, |
| ७. Yoga and Perfection—in English Verse | | ३) |
| ८. ॐ नमः कृष्णाय—देवनागरी लिपि में | | दक्षिणा |
| ९. ॐ नमः शिवाय— ,, ,, | | ।) |

## श्रीमत् स्वामी ज्ञानानन्द जी महाराज--लिखित

| | | |
|---|---|---|
| 10. Purna Sutras | in English | 5.00 |
| 11. Darshnika Maha-Pravachana | ,, | 5.00 |
| 12. Philosophy of Yoga | ,, | 5 00 |
| 13- Glimpses | ,, | 4-00 |

## श्रीमत् स्वामी अमलानन्द जी महाराज--लिखित

| | | |
|---|---|---|
| 14- Path of Meditation | in English | 1-50 |

# साधारण-प्रचलित हिन्दी

# 'आरती'-गीति ।

ओ३म् जय जगदीश हरे, शिव, जय जगदीश हरे !
भक्त–जनन के संकट, क्षण में दूर करे ॥

जो ध्यावे फल पावे, दुःख विनशे मन का. शिव दुःख विनशे॰
सुख–सम्पति घर आवे. कष्ट मिटे तन का ॥

मातु पिता तुम मेरे, शरण गहूं किसकी, शिव, शरण गहूं कि॰
तुम बिन और न दूजा. आस करूँ जिसकी ॥

तुम पूरण परमात्मा, तुम अन्तर्यामी, शिव, तुम अन्तर्यामी !
पारब्रह्म परमेश्वर, तुम सबके स्वामी ॥

तुम करुणा के सागर, तुम पालनकर्त्ता, शिव, तुम पालनकर्त्ता !
मैं सेवक तुम स्वामी, कृपा करो भर्त्ता ॥

तुम हो एक अगोचर, सबके प्राणपति, शिव, सबके प्राणपति !
किस विधि मिलूँ, दयामय, तुमको मैं कुमति ॥

दीनबन्धु दुःख-हर्ता, तुम रक्षक मेरे, शिव, तुम रक्षक मेरे !
करुणा–हस्त बढ़ाओ, शरण पड़ा तेरे ॥

विषय विकार मिटाओ. पाप हरो देवा, शिव, पाप हरो देवा !
श्रद्धा भक्ति बढ़ाओ, सन्तन की सेवा ॥

---

ॐ त्वमेव माता च पिता त्वमेव,
त्वमेव बन्धुश्च सखा त्वमेव !
त्वमेव विद्या द्रविणं त्वमेव,
त्वमेव सर्वं मम देव देव ॥

ॐ शान्तिः, ॐ शान्तिः, ॐ शान्तिः ॥
ओ३म् ॥